❀ श्रीः ❀

श्रीमदानन्दवनप्रसूनमालायाः (१)

प्रथमं पुष्पम् ।

सर्वतन्त्रस्वतन्त्र—

महामहिम-आचार्य—

श्रीमदमृतवाग्भवप्रणीतं

# ★ श्रीसिद्धमहारहस्यम् ★





प्रकाशकः—
ग्रन्थ प्रणेता

प्रथमं संस्करणम्

विक्रम सं० २०२३

मूल्यं-रूप्यकमेकम्

श्रीः

पुस्तक-प्राप्तिस्थान-

राजपण्डित श्रीगोविन्दमिश्र

(अध्यक्ष-श्रीस्वाध्यायसदन, सोलन)

चौबुर्जा, भरतपुर (राजस्थान)

आचार्याऽमृतवाग्भवेन रचिता विद्वद्धुरीणैः स्तुता
ख्याता सिद्धमहारहस्यमिति या विज्ञाः ! कृतिः शोभते ॥
तां लोकाऽनुजिघृक्षया कृतिमिमां सम्मुद्रितां शाम्भवीं
पात्रेभ्यः प्रतिपादयामह इमे धन्या वयं सम्प्रति ॥

'श्रीसिद्धमहारहस्यम्' इत्याख्यां कृतिमिमां श्रीशक्तिपातपूतान्तःकरणवतां साधकानामात्मश्रीविन्दुप्रत्यभिज्ञायै भारतीयानां पुण्ययशोऽभिवृद्धये पूर्णस्वतन्त्रताया योगक्षेमार्थं च बहुमूल्यामप्यमूल्यवतीमेव पात्रेभ्यः प्रतिपादयामः--

१ गार्ग्यसगोत्रः श्रीजीवारामशर्मा
२ कौशिकसगोत्रः श्रीजटाशङ्करशर्मा
३ वशिष्ठसगोत्रः श्रीभगवान्दासशर्मा
४ वशिष्ठसगोत्रः श्रीरघुनाथचन्द्र शर्मा शास्त्री साहित्यरत्न आयुर्वेदरत्न एम.ए.
५ कौशिकसगोत्रः श्रीरामरत्नशर्मा सङ्गीतप्रभाकर
६ मुद्गलसगोत्रः श्रीरविशर्मा एम. ए. बी. टी.

❀ श्रीः ❀

श्रीमदानन्दवनप्रसूनमालायाः प्रथमं पुष्पम्

सर्वतन्त्रस्वतन्त्र-

महामहिम-आचार्य-

श्रीमदमृतवाग्भवप्रणीतं

# * श्रीसिद्धमहारहस्यम् *

महामहोपाध्याय-पद्मविभूषण-

श्री १०८ गोपीनाथ-कविराज एम० ए०, डी० लिट्-

महोदयानामाशिषा समुद्भासितम्


प्रकाशकः—

ग्रन्थप्रणेता

प्रथमं संस्करणम् | वि० स० २०२२ चै० शु० १० रवि० | मूल्यं रूप्यकमेकम

❀ श्रीः ❀



सुकवीन्विबुधान्गुरून्प्रसिद्धा-
नियमानन्दवनप्रसूनमाला ।
भववाङ्भवभावमानयन्ती
नवगौरीव गिरीशकण्ठलग्ना ॥



विद्येहं वेद्मि विन्दामि नदन्स्वं कलया स्वया ।
महाशाकोऽभिनन्दामि चात्मनः पूर्णविन्दुताम् ॥

इति निवेदयति—
**ग्रन्थप्रणेता**
श्रीमान् अमृतवाग्भव आचार्यः

❀ श्रीः ❀

वाराणसीपण्डितमण्डलीमुकुटमणीनां विश्वविख्यातयशसां महामहोपाध्याय-पद्मविभूषण एम० ए०, डी० लिट् इत्याद्यनेक-विरुदावल्या सेव्यमानानां भूतपूर्वकाशिकराजकीयसंस्कृतमहाविद्यालयप्रचार्याणां पूज्यपाद श्री १०८ गोपीनाथकविराजमहोदयानां प्रस्तुतग्रन्थ-"श्रीसिद्धमहारहस्यम्" कारकृते आशीर्वादः—

---

महामहोपाध्याय गोपीनाथ कविराज<br>एम० ए०, डी० लिट्०, पद्मविभूषण

२ (ए) सिगरा, वाराणसी<br>दिनांक ३०-३-१९६५

सर्वतन्त्रस्वतन्त्रः प्रसिद्धवैदुष्य आचार्यः श्रीमान अमृतवाग्भवनामा सिद्धमहारहस्याख्यया पद्यात्मकं किमपि लघुकायमेकं पुस्तकं निर्माय अनिच्छन्नपि गुरुनिर्देशात् प्राकाश्यं नीतवान्।

पुस्तकमिदं पत्रसंख्यया लघीयस्तया प्रतीयमानमपि महार्घ्य रत्नोपमगुह्यतत्त्वगर्भत्वाद् गरीय एव मे प्रतिभाति।

अद्यत्वे विश्रुतकीर्तिराचार्योऽयं कदाचित् कैशोरान्ते यौवनोन्मेषवयसि पाठशालासंबन्धेन मदीयं वात्सल्यभाजनमासीदिति तथैवाद्यापि भूयोभूयः तं स्मरामि। षट्त्रिंशद्वर्षेभ्योऽप्यधिककालं यावत्तस्य देशान्तरावस्थानवशात् दर्शनाभावेऽपि तदीया स्मृतिर्मदीये चित्तदर्पणे पूर्ववदेव समुज्ज्वला भाति। महत्यस्मिन्नन्तरे स्वाचरिततपःप्रभावाद् वा स्वीयप्राक्तनशुभकर्मपरिपाकाद् वा अचिन्त्याहैतुकभगवदनुग्रहबलाद् वा तस्य जीवने महती समुन्नतिः

संजाता। नैषा लौकिकी काचित् प्रतिष्ठा, न वा विद्वद्गोष्ठीषु कोऽपि समादरः, परं तु स्वात्मस्वरूपस्याभिन्नशिवशक्तिरूपस्य निरावरणप्रकाशमार्गे काऽप्यनिर्वचनीया प्रगतिः।

रहस्यग्रन्थावलोकनतो ज्ञायते—कलियुगस्य सर्वादितन्त्रोपदेशकेन अनसूयागर्भसंभूतेन क्रोधभट्टारकसंज्ञकेन भगवता श्रीदुर्वाससा मुनिना प्रत्यक्षमाविर्भूय तस्मै पूर्णयोगस्य उपदेशः प्रदत्तः। इममेव योगमवलम्ब्य सर्वेषां योगानां पूर्णत्वं संपद्यते। प्राप्तोपदेशः स ततःप्रभृति दीर्घकालपर्यन्तं नैरन्तर्येण सत्कारेण च पूर्णाहम्भावमाश्रित्य तं योगं सेवमान आसीत्। तदानीमन्तराऽन्तरा तेन बहूनि दिव्यदर्शनानि लब्धानि। यस्मिन् देशे काले च यद् दर्शनं जातं तस्य समुल्लेखः स्पष्टरूपेण विहितः। सर्वमिदं सुगोप्यमपि भगवदाज्ञया जीवकल्याणमभिसन्धायैव संक्षेपेण प्रकटितम्। अस्मात् शक्तिपातपूतसाधकानां महानुपकारः संभवेदिति मदीयो विश्वासः।

ग्रन्थकृताप्युक्तम्—

श्रीसंप्रदायोक्तनयक्रमेण सारल्यचेतोहरमात्मशम्भोः।
ये प्रत्यभिज्ञारसमाप्तुकामास्ते ग्रन्थमेनं परिशीलयन्तु॥

ग्रन्थकारः श्रीविश्वेश्वरकृपया स्वस्थकायः स्वच्छन्दः चिरं जीवन् योग्यशिष्येभ्यः सदुपदेशप्रदानेन लोककल्याणं विदधातु।

—गोपीनाथ-कविराज

❀ श्रीः ❀

अथ

आचार्य-

श्रीमदमृतवाग्भवप्रणीतं

# श्रीसिद्धमहारहस्यम् ।



१

सिद्धं समिद्धममितं हृदयेऽस्मदीये
वाक्कामशक्तिजननीवरिवस्ययाऽऽप्तम् ।
नोद्घाटनीयमपि सम्प्रति योगिनीना-
मादेशतो विवृतमस्ति महारहस्यम् ॥

२

तस्मात् सदैव समुपासितदैशिकेन्द्राः
श्रीमण्डले विधिवदर्जितसन्निवेशाः ।
शास्त्रं यथावदवगम्य समस्तमेतत्
सच्छिष्यवृन्दहृदयेषु निवेशयन्तु ॥

इह खलु नानाविधवस्तुनिचयपरिपूर्णे विश्वस्मिन् विश्वमण्डले निजया नैसर्गिक्या वैसर्गिक्या शक्त्या सामरस्येन समवस्थितेऽभिनवरमणीये परशिवमहाविन्दौ जायमानः सर्वोऽपि परशिवाऽनतिरिक्त एव। द्वैतभावस्य हि सर्वस्यापि काल्पनिकत्वात्। अत एव तत्प्रतियोगितया स्थाप्यमानोऽद्वैतभावोऽपि कल्पनाशय्यामेवाऽधिशेते। एवं हि सर्वेऽपि भावाः परमकारणभूते महागुरौ परमशिवे सृष्टिस्थितिसंहारनिग्रहाऽनुग्रहेति पञ्चविधतया चञ्चत्प्रपञ्चतामञ्चन्ति। ततश्च स महागुरुरूपो महाऽनुभावो महाभागो महाभावः केनेष्टव्यो जिहासयोपादित्सया वा? केन वा नेषणीय उपादित्सया जिहासया च? एवमेव केन हि जिहासोपादित्साभ्यां ज्ञेयो वाऽज्ञेयो वा भावनीयो महाभावः? अथ तथैव क्रियाविषयेऽपि। सर्वोऽप्ययं प्रपञ्चः पूर्णानन्दायैव कल्पते इति तु सिद्धसिद्धान्त एव। तदेतद् यथा तथाऽस्माभिरेव स्वोपज्ञे श्रीआत्मविलासे सम्यगुपपादितम्। यथा तत्र द्वितीयप्रकरणे—

आनन्द एव पर्यन्तः सापेक्षसुखदुःखयोः।
स्वाऽनुभूत्या विमृशतां निश्चितं मतमुत्तमम्॥

(आ० वि० २—१६) इति।

तदेवं स्वरूपपर्यालोचनानिभृतविश्रान्तिः प्रयोजनं स्वरसप्रवहणशीलं सर्वदा सर्वत्र परिस्फुरतितमामिति समन्ततः सिद्धम् । स्वरूपनिर्णयः पुनः सविस्तरमस्माभिरेव स्वोपज्ञे श्रीलात्मविलासे विहितस्तत एव सुनिपुणं समभ्यसनीयः । अत्र पुनः शास्त्रे 'श्रीसिद्धमहारहस्यम्' इत्यन्वर्थाभिधाने श्रीलात्मविलासप्रतिपादितसिद्धान्ताधिष्ठानस्थानीयं रहस्यतमं विज्ञानौपयिकमुपायजातं विज्ञापनीयमिति विषयविभेदः । उपाया अपि स्वानन्दायैव स्वकल्पनया व्यवस्थापिता इति तु न विस्मरणीयं जात्वपि । परिपूर्णे खलु सर्वमपि समस्तीति समस्ताऽविरोधितया सिद्धे स्वरसप्रवहणशीले सिद्धान्ते द्वैताऽद्वैतमूलाधिष्ठाने भगवति परमेश्वरे एव प्रश्नोत्तरमालिकानामप्युदयो भवितुमर्हति । परशिवस्यैव सनातनत्वात् । तदतिरिक्तस्य कस्याप्यप्रतीयमानतयाऽसत्त्वात् । आपेक्षिकसदसतोर्द्वयोरपि महासत्तायामेवान्तर्भावात् । विधिशास्त्राणां निषेधशास्त्राणां च महाविधावेव पर्यवसानसिद्धान्तात् । भवतु । अत्रेदं बोध्यम्—

भगवान् परशिव एव खलु स्वात्मानं द्विधा कृत्वा समस्तप्रपञ्चं स्वरूपमपि स्वविलक्षणं प्रपञ्चयति । तदेतदस्माभिः सोपज्ञे श्रीलात्मविलासे सुविशदं निरूपितम् । यथा—

स्वात्मानं स्वविलासेन विश्वरूपेण भासयन् ।
नित्योदितः कोऽपि देवो जयत्यात्मा परः शिवः ॥
( आ० वि० २—१ ) इति ।

श्रीराष्ट्रसञ्जीवनाभिधाने श्रीराष्ट्रालोकभाष्ये कल्याण सौगन्धिकव्याख्यायां श्रीकलायां च प्रसङ्गतो विशदीकृतमस्माभिः । इदानीं पुनः सिद्धान्तरूपेण "श्रीसिद्धमहारहस्यम्" शिष्यजनाऽनुजिघृक्षयाऽवतारयिष्यते—

३

रक्तशक्तिममितौजसीं कलां
लालितीममृतवर्षिणीं पराम् ।
सारसेऽहमि सहस्रपत्रके
हंसगां शिरसि गौरवीं भजे ॥

४

दिव्यान् सिद्धान् मानवांश्च गुरून् गुरुपरम्पराः ।
सर्वेषां पादुकाश्चाहं वन्दे वाक्कायमानसैः ॥

५

पूर्वमङ्गं समस्तानां प्रारम्भाणां प्रधानतः ।
स्मरणं वारणास्यस्य सर्वविघ्नौघवारणम् ॥

६

प्रकाशानां विमर्शानां गणानां त्वमहं पतिम् ।
महाशाकसुतं वन्दे प्रारम्भप्रणवं गवाम् ॥

७

क्षीरोदधेरिवोमाया उद्यन्नानन्दयञ्जगत् ।
ग्लौरिव श्रीगणाधीशो विघ्नस्तोमं निहन्तु नः ॥

८

कपाली कुण्डली दण्डी सिन्दूरारुणविग्रहः ।
श्रीमान् बटुकनाथः स्तादापदुद्धारणाय नः ॥

९

ऐन्दवीं कलिकां शीर्षे शौक्लीं भूतिं च वर्ष्मणि ।
चान्द्रीं सौरीं तथाग्नेयीं दृष्टिं बिभ्रच्छिवोऽवतात् ॥

१०

फुल्लालापाः प्रतिपदं पर्यन्ते तीर्थयात्रिणः ।
मुण्ड्यन्ते यत्र पाण्डेयैस्तानि तीर्थानि पान्तु नः ॥

११

श्रीराधारुक्मिणीकान्तं श्रीश्रीकृष्णं महागुरुम् ।
वरया कलया युक्तं वन्दे शङ्कररूपिणम् ॥

१२

स्वयं सिद्धे भगवति शिवे शेषे मनोहरे ।
वाचामगोचरे वन्दे नित्यं पद्मनामयम् ॥

१३

त्यागं त्यागाय मुखजो भोगं त्यागाय बाहुजः ।
भोगाय चोरुजस्त्यागं भोगं भोगाय पादजः ॥

१४

वृणोमि मनसा वाचा विवृणोम्याचराम्यपि ।
चर्यया जीवतामाप्तस्त्वत्तद्वर्णगतः शिवः ॥

१५

भावाभावोल्लासिकलो विन्दुगो निजमन्दिरे ।
दीव्यामि स्वावबोधोऽहं महो वैसर्गिकं सदा ॥

१६

शक्नोमि काशे स्वाकाशे स्वातन्त्र्यात् पारिपूर्ण्यतः ।
युगपत् सामरस्येन नित्यं सोऽहमहम्महः ॥

१७

समस्मि सुकृती स्वस्यामिष्टौ ज्ञातौ कृतावलम् ।
विमर्शे च प्रकाशे च विश्राम्यामि स्फुरन् समम् ॥

१८

आत्मना कलये वेद्मि नदामि स्वसमर्थितः ।
हृष्टः पुष्टश्च तुष्टश्च विदृणोम्यावृणोमि च ॥

१९

योगिनीनां चतुःषष्टिं कलानां षोडशीं तथा ।
चतुष्टयीमवस्थानां प्रकाशे विमृशाम्यहम् ॥

२०

शाकः काशश्च काशश्च शाको भवति सर्वथा ।
यः काशते स शक्नोति यः शक्नोति स काशते ॥

२१

शाकोऽहं स्पन्दमानः सन् स्वस्मिन्नेमि प्रकाशताम् ।
विमृशन् स्पन्दमानत्वं स्वस्मिन्नेमि विमर्शताम् ॥

२२

अन्तर्बहिः शाक एव काशं स्वं विमृशन्नहम् ।
प्रभुर्विलासतामेमि लौहितीं कालितीं वहन् ॥

२३

विभक्तीनां सप्तकेन वाग्रूपं स्वं गृणामि च ।
सम्बोधनेन स्वस्यैव स्वात्मानं विमृशाम्यहो ॥

२४

उत्तमः पुरुषः स्वस्मिन् भामि यामि रमे सदा ।
वमामि स्वं प्रामि पामि संहरामि स्वयं प्रभुः ॥

२५

समालम्ब्य समेधन्ते यत्पदं स्फुरिताधराः ।
स्फुरणेन क्रियास्तास्ताः कलावत्यो निरन्तरम् ॥

२६

सोऽहं शाकोऽभिनन्दामि स्वं क्रियापदमुत्तमम् ।
मामालम्ब्यैव सर्वत्र कारकत्वं प्रतिष्ठितम् ॥

२७

धातुभावेन सन्धातुं धातून् सर्वानपि स्फुरन् ।
शाकोऽहमेव शक्नोमि वाचयन् सकलाः क्रियाः ॥

२८

भासमानः प्रतिपदं प्रोत ओतः स्ववैभवात् ।
स्वतन्त्रं प्रातिपदिकं शाक एव भवाम्यहम् ॥

२९

शब्दाश्चार्थाश्च सर्वेऽपि शाकेनैकेन पूरिताः ।
तस्मात् सर्वं शाक एव महोऽहमिति निश्चितम् ॥

३०

पदे पदे शाक एव काशं स्वं विमृशन् मुहुः ।
अनन्तनामरूपाणि दधामि निजलीलया ॥

३१

उपसर्गो निपातो वा नाम वाऽऽख्यातमेव वा ।
अन्तरा शाकभरणं कदाचिदपि न स्फुरेत् ॥

३२

शक्नोमि शाक एवैकः शाब्दीमार्थीं च भावनाम् ।
कर्तुं ज्ञातुं तथा चेष्टुं विभ्रत् सर्वं स्वशाक्ततः ॥

३३

सृष्टिः स्थितिः संहृतिश्च निग्रहोऽनुग्रहोऽपि वा ।
यमन्तरा जीवति नो स शाकः केन वर्ण्यताम् ॥

३४

अमृतं सर्वजीवातुरतीतस्तुर्यतां मुहुः ।
गाहते त्रिपुटीं स्वस्मिन् शाक उल्लासयन् शिवः ॥

३५

यः पश्यन्त्या मध्यमया वैखर्या वक्ति चोच्यते ।
परया च परो वाचां सोऽहं शाको महाशिवः ॥

३६

जाग्रत् स्वप्नः सुषुप्तं च लभते यत्र पूर्णताम् ।
तत्तुर्यं तदतीतं च शाक्त एव न संशयः ॥

३७

महाकामेश्वरः शाक्तः परिपूर्णो महत्तया ।
गाहते सर्वभावेन सर्वत्र समदर्शनः ॥

३८

करोति क्रियते नित्यं जानाति ज्ञायतेऽपि च ।
शाक्त एको महादेवो महादेवीच्छतीष्यते ॥

३९

निगृह्यते निगृह्णात्यनुगृह्णात्यनुगृह्यते ।
एक एव परं तत्त्वं महाकामेश्वरी महः ॥

४०

शब्देऽनुमाने प्रत्यक्षे प्रामाण्यं यदपीष्यते ।
तत् सर्वं शाक्तमाहात्म्यं तस्माच्छाक्तो महेश्वरः ॥

४१

मेये माने मातरि च य ओतप्रोतभावतः ।
काशते स महान् काशः शाक्त एव महेश्वरी ॥

४२

पृथिव्यां वर्त्तमानेषु पुरग्रामगृहादिषु ।
पृथिवीव व्याप्य विश्वं शाकोऽहं सुप्रतिष्ठितः ॥

४३

शाकेन भरितं सर्वं शाकरूपमहम्महः ।
शाकम्भरीतिविख्यातं शिवं विजयते परम् ॥

४४

यत्प्रसादादिदं लब्धं रहस्यं पावनं परम् ।
कोपभट्टारकं वन्दे तमनुग्रहविग्रहम् ॥

४५

स्वनिर्मितस्तोत्रपाठसन्तुष्टहृदयो मुनिः ।
पूर्णषोडशवर्षं मामकस्मात् करुणार्णवः ॥

४६

प्रत्यक्षं दर्शनं दत्त्वाऽन्वगृह्णाद्दीनवत्सलः ।
उपादिशत् पूर्णयोगं साधनाहृदयं महत् ॥

४७

वाक्कामशक्तिमहितं कोटिबालार्कसन्निभम् ।
पापकालानलं बालमिष्टं दैवतमाश्रये ॥

४८

कोटिविद्युत्प्रतीकाशं फुल्लकल्हारबिन्दुगम् ।
पुस्तमालाभयवरकरं दैवतमाश्रये ॥

४९

समस्तकल्पनामूलमरुणं करुणाघनम् ।
ललितं कामवरदमिष्टं दैवतमाश्रये ॥

५०

क्रियायोगो ज्ञानयोग इच्छायोगोऽपि पूर्णताम् ।
यत्र गच्छति योगः स वास्तवो योगपुङ्गवः ॥

५१

न किञ्चित् क्रियते यत्र किमपि ज्ञायते न च ।
इष्यतेऽपि च नो किञ्चित् स योगः परमोऽस्ति नः ॥

५२

आस्वाद्य स्वरसां पूर्णां मेळनामिदमहमोः ।
जयाम्यसुलभं शाक्तममृतं पदमव्ययम् ॥

५३

धर्मार्थकाममोक्षाणां चिन्ता यत्र न विद्यते ।
अस्माकं पुरुषार्थः स महान् शाक्तः परः शिवः ॥

५४

सिद्धानां योगिनीनां च पूर्णतामेति मेलनम् ।
यत्र शाक्तः स भवताद् विजयाय महान् हि नः ॥

५५

ब्राह्मादिशैवान्तवेदा यद्वर्णयितुमक्षमाः ।
रहस्यं मूकतां यान्ति शाक्ते तत् पूर्णमस्ति नः ॥

५६

उपेतार उपाया अप्युपेयानि च सर्वशः ।
अम्भोधौ वीचय इव शाक्ते सर्वं प्रतिष्ठितम् ॥

५७

उपाया आणवाः शाक्ताः शाम्भवा अपि जीवनम् ।
लभन्ते यं समालम्ब्य स शाक्तः सर्वजीवनम् ॥

५८

हेतौ फलं फले हेतुर्द्वयमेकत्र यद्बलात् ।
प्रतीयते तत् समस्तं बलं शाक्ते प्रतिष्ठितम् ॥

५९

सतोऽसज्जायते विश्वमसतो जायते च सत् ।
यद्बलेन समस्तं तद् बलं शाक्ते प्रतिष्ठितम् ॥

६०

अदृष्टं दृष्टवत् सर्वमश्रुतं श्रुतवद् भवेत् ।
बलेन येन तत् सर्वं बलं शाके प्रतिष्ठितम् ॥

६१

सङ्कोचो वा विकासो वा यद्बलात् परिभाष्यते ।
प्रतीयते वा तत् सर्वं बलं शाके प्रतिष्ठितम् ॥

६२

व्यञ्जनायां लक्षणायामभिधायां च यद् बलम् ।
प्रतीयते स्थाप्यते वा तद् बलं शाकमूलकम् ॥

६३

विस्मृत्या जाग्रति स्वप्ने स्मृत्या सुप्तेऽनुभूतितः ।
तुर्यायां भूतितश्चैकः शाक एव विराजते ॥

६४

यमैश्च नियमैर्नित्यं चासनैः प्राणसंयमैः ।
प्रत्याहारैर्धारणाभिर्ध्यानेन च समाधिना ॥

६५

यस्य लाभाय मुनय ऋषयः संशितव्रताः ।
प्रयतन्ते महान् देवः स्वभावः शाक एव सः ॥

६६

यदुपादेयतां नैव गाहते नैव हेयताम् ।
स्वयंसिद्धं परं तत्त्वं स्वभावः शाक एव सः ॥

६७

प्रशस्ताः करणेश्वर्यौ देवतां पूजयन्ति याम् ।
ऐकायनेन निश्चेष्टाः शाको नः साऽस्ति देवता ॥

६८

अष्टौ वाग्देवता अष्टौ सिद्धयो निधयो नव ।
यमालम्ब्यैव जीवन्ति स शाको विजयाय नः ॥

६९

आदित्या द्वादश तथा रुद्रा एकादशापि च ।
वसवोऽष्टावपि सदा शाकमेवाश्रयन्त्यहो ॥

७०

शिवादिक्षितिपर्यन्तषट्त्रिंशत्तत्त्वदेवताः ।
यजन्ते पूर्णयोगेन मुनयः शाकमेव नः ॥

७१

विधाय भूतशुद्ध्यादि षोढान्यासरविचित्रिताः ।
यजन्ते मन्त्रयोगेन मुनयः शाकमेव नः ॥

७२

पिधाय कर्णकुहरे तर्जनीभ्यां गुहादिषु ।
नादयोगेन सेवन्ते मुनयः शाकमेव नः ॥

७३

दीपज्योतिषि निर्वाते बिन्दौ वा भित्तिलाञ्छिते ।
केचित् त्राटकयोगेन शाकं प्रत्यभिजानते ॥

७४

पद्मासनमधिष्ठाय मुद्रामालम्ब्य षण्मुखीम् ।
केचित् प्राणनिरोधेन भजन्ते शाकमेव नः ॥

७५

केचित् कपालकुहरं खेचर्यापूर्य जिह्वया ।
सोमपीयूषपानेन यजन्ते शाकमेव नः ॥

७६

आपाद्य पञ्चतां केचित् प्रपञ्चं लययोगतः ।
कारणात् कारणे लीनाः शाकमेवाश्रयन्ति नः ॥

७७

योषिता मिथुनीभूता विरलाः साधकाः पुनः ।
वज्रोल्या वज्रसाराङ्गा भजन्ते शाकमेव नः ॥

७८

ये पञ्चभिर्महायज्ञैर्यजन्ते विश्वदेवताः ।
पर्यन्ते तेऽपि लीयन्ते शाक्त एव न संशयः ॥

७९

विस्मृतावाणवः स्मृत्यां शाक्तः शाम्भव इष्यते ।
अनुभूत्यां शाक्त एवोपायरूपः परः शिवः ॥

८०

उपायमन्तरेणैव भूतौ साक्षाद्भवाम्यहम् ।
अभिनन्दन् बलं स्वस्य महान् शाक्तः परः शिवः ॥

८१

पञ्चम्या प्रत्यभिज्ञानं शाक्तस्य सुदृढं महत् ।
भवतीति यजन्ते ते पञ्चम्यां पञ्चमीप्रियाः ॥

८२

पञ्चानामपि कोशानां काशतेऽन्तर्बहिश्च यः ।
शाक्तं ब्रह्मेति तं केचिद् बृहत्त्वात् समुपासते ॥

८३

चतुर्विधापि वाग्वक्तुं यमालम्ब्यैव शक्नुते ।
अतीतमपि वाग्रूपं शाक्तं वागित्युपासते ॥

८४

वहन्तं सहजं प्राणमपानग्रासपेशलम् ।
युञ्जन्ति केचित् स्वरसात् शाक्ते भूतिदिदृक्षया ॥

८५

हंसवागीश्वरीं केचित् सन्ततं स्वैरचारिणीम् ।
सेवन्ते मध्यमार्गस्था युक्त्या शाक्तपरीप्सया ॥

८६

पश्यन्ति युक्त्या प्रणवमुद्गतं प्राणमूलतः ।
दीर्घंदीर्घतमं केचित् शाक्तदर्शनलालसाः ॥

८७

सकलां निष्कलां कामकलां केचित् कपालिनीम् ।
कलयन्ते कुलाचारयुक्त्या शाक्तरिरंसया ॥

८८

कुलीनाः केऽपि कल्पन्ते कुलवागीश्वरीं कुले ।
कुमारीं भावयन्तोऽपि शाक्तभूतिनिदर्शने ॥

८९

तत्त्वत्रयं शाक्तब्रह्मात्मविद्याशिवाभिधम् ।
हुत्वा सतुर्यं चातुर्यात्संपिबामि महामृतम् ॥

९०

भवाऽभवे चातिभवं विमृश्य स्वप्रकाशतः।
स्वात्मानमभिनन्दामि महाशाको महाबलः॥

९१

पद्मासनमधिष्ठाय समसर्वाङ्गविग्रहम्।
परस्परोपरिधृतौ करौ कृत्वाङ्कगावुभौ॥

९२

निर्वातदीपवत्तिष्ठन् क्रियाज्ञानैषणाः समाः।
अगृह्णन्नत्यजन् नित्यं स्वात्मानं शम्भुमीक्षते॥

९३

महाराजाधिराजोऽयं योगानामुत्तमोत्तमः।
स्वशाकप्रत्यभिज्ञाने महाशाको न संशयः॥

९४

लालितोऽनेन योगेन पूर्णाऽहम्भावमाश्रितः।
दृष्टानि दिव्यदृश्यानि कानिचिद्वर्णयाम्यहम्॥

९५

तिस्रः स्त्रियो दात्रहस्ताः पुरुषो वेणुवादनः।
हिमालयोपत्यकायां वने विस्मृतमार्गकम्॥

९६

मां मार्गं सम्प्रदर्श्यैव शम्पेव काप्यलक्ष्यताम् ।
गता नमामि ताः स्मृत्वा करुणाकरदेवताः ॥

९७

महाधिपमिते वर्षे मार्गे पूर्णगिरेर्वने ।
वृत्तं वृत्तं तपोदर्शे विस्मयोत्पादकं महत् ॥

९८

दिव्यरम्भागर्भकान्ति रम्भास्तम्भोपमं महत् ।
आपादकटिपर्यन्तमाश्लिष्टं यत् परस्परम् ॥

९९

अलक्ष्योत्तुङ्गतं लम्बकुन्तलाग्रलसत्कटि ।
धरित्र्याकाशयोर्मध्ये मिथुनीभूय संस्थितम् ॥

१००

अप्रतर्क्यपरीणाहं दृश्यजानुपदाम्बुजम् ।
ज्योतिर्लिङ्गमिदं दिव्यं कट्यूर्ध्वं दृगगोचरम् ॥

१०१

अत्यद्भुतं चतुष्पादमारक्तस्फटिकाङ्गुलि ।
दृष्टवानमरेशस्य गुहायां लोमहर्षणम् ॥

१०२

दक्षिणे मम पूर्वस्यां दिश्यासीत् परमः पुमान् ।
मम वामे पश्चिमायां तस्यासीत् प्रकृतिः परा ॥

१०३

भयविस्मयविभ्रान्तो मुहूर्तं मौनमास्थितः ।
विस्मृत्योपाविशं सर्वं जगत् पश्यन्नहं चिरम् ॥

१०४

कोपभट्टारकमोक्षसाधनाहृदयाम्बुधौ ।
निमज्जन् दृष्टवान् शाकं सोऽहं शाको महाशिवः ॥

१०५

नभःशुक्लचतुर्दश्यां वृत्तं सोमदिने दिवा ।
चक्रमेऽब्दे दृष्टमिदं चिदाधिपमिते गते ॥

१०६

श्वेतरक्तश्यामशारिपक्षित्रितयरूपिणी ।
शारदाम्बा येन दृष्टा सोऽहं शाकः परः शिवः ॥

१०७

दिव्यवर्षसहस्रान्ते श्री ाण्डिल्यमहर्षिणा ।
दृष्टमस्ति पुरा रूपं मया तन्नवभिर्दिनैः ॥

१०८

चिदाधिपमिते वर्षे शारदामन्दिराङ्गणे ।
नवम्यामाश्विने शुक्ले वृत्तं वृत्तमिदं दिवा ॥

१०९

शैलपुत्रीस्थलेऽसंख्यकोटिब्रह्माण्डबुद्बुदम् ।
साक्षात्कृतं शाकरूपं महाशब्दार्थमद्भुतम् ॥

११०

विचित्रगतिशब्दार्था यत्र लोकाः सहस्रशः ।
सन्ति येष्वप्यनेकेषु कायोऽयमवलोकितः ॥

१११

अस्मि सोऽहं परशिवः पिबता स्वरसासवम् ।
नीतं यामत्रयं येन निमेषसदृशं दृशौ ॥

११२

चिदाधिपमिते वर्षे दशम्यां कार्तिके सिते ।
वराहमूले काश्मीरे वृत्तं वृत्तमिदं निशि ॥

११३

विद्युच्छश्यग्निसूर्येभ्योऽप्यधिकं शान्तभास्वरम् ।
मार्तण्डभवने दृष्टं शाकरूपं तदस्म्यहम् ॥

११४

सिते दशम्यां तपसि चिदाधिपमिते गते ।
वैक्रमेऽङ्के वृत्तमिदं द्वितीये प्रहरे निशि ॥

११५

कोशाः पञ्चापि महिता येन साक्षात्कृताः स्वयम् ।
स्थले कर्कोटनागाख्ये स शाकोऽहं परः शिवः ॥

११६

पञ्चम्यां चैत्रशुक्लस्य सिंहाधिपमिते गते ।
वैक्रमेऽङ्के वृत्तमिदं पूर्वाह्णे विस्मयावहम् ॥

११७

मायाकुण्डलिनीपद्यरहस्यं शून्यवेश्मनि ।
स्वेच्छया कृपयादिश्य गतं काममलक्ष्यताम् ॥

११८

नरं काश्मीरकाकारं मिलितं शारिकाजिरे ।
श्रीपुरे शिवजीत्याख्यं सिद्धं कंचन नौम्यहम् ॥

११९

सिंहाधिपमिते वर्षे भाद्रमासे सिते दले ।
वृत्तमेतच्छ्रीनगरे वृत्तमाश्चर्यकारकम् ॥

१२०

भयङ्करज्वराक्रान्तमतिदीनं पिपासया ।
शुष्यन्मुखं निर्जनस्थमसहायमचेतनम् ॥

१२१

दिव्यां त्रैयम्बकां विद्यां यो मां सञ्जीवनीं स्वयम् ।
पाययित्वा पयो दिव्यं स्वकमण्डलुसंस्थितम् ॥

१२२

उपादिशन्महान कोऽपि पुरुषः कृष्णपिङ्गलः ।
दधत्त्रिशूलकरकौ दिव्यकारुण्यविग्रहः ॥

१२३

अज्ञातनामधामापि करुणाहृतमानसः ।
वन्दे तमद्भुतं साक्षाच्छिवरूपं हृदि स्थितम् ॥

१२४

कुलूते धर्मशालायां श्मशानेश्वरसन्निधौ ।
वैक्रमेऽब्दे वृत्तमिदं देहाधिपमिते गते ॥

१२५

लम्बकूर्चं तडिन्नेत्रं घनरोमकचाचितम् ।
उत्तर्जनीकं गर्जन्तं वात्सल्यान्वितमानसम् ॥

१२६

मन्निर्मितः "प्रभो शम्भो" श्लोको यत्सदयेच्छया ।
इष्टसिद्ध्यै प्राप सिद्धमहामन्त्रस्वरूपताम् ॥

१२७

अज्ञातनामधामानं वन्देऽहं दिव्यपूरुषम् ।
श्रद्धया परया नित्यं तमपि प्राप्तगौरवम् ॥

१२८

खनन्दनन्देन्दुमिते वैक्रमे मासि माधवे ।
नालागढे धर्मसभाभवने घटितं त्विदम् ॥

१२९

प्रायोपवेशनं कृत्वा पुण्ये भागीरथीतटे ।
पातयिष्ये देहमिति प्रत्यजानां यदार्दितः ॥

१३०

तदा कोऽपि महान् पुण्यः पुरुषो दिव्यदर्शनः ।
शुभ्रकेशश्मश्रुकूर्चश्चन्द्रगौरः शुचिस्मितः ॥

१३१

प्रवयाः श्वेतवसनः श्वेतभ्रूः श्वेतरोमवान् ।
निर्यद्देहप्रकाशेन येन गेहे दिनायितम् ॥

१३२

निशीथे प्रकटीभूय मम स्थाने स्वयेच्छया ।
अनौचित्यं प्रदर्श्यास्याः प्रतिज्ञायाः स माऽब्रवीत् ॥

१३३

देहं न पातयिष्यामि स्वयं भगवदिच्छया ।
समाप्तौ भोगजातस्य प्राप्ते काले पतिष्यति ॥

१३४

प्रतिजानीहि वत्सैवं यतस्त्वमसि पण्डितः ।
शरीरस्यापि भूयांसः सन्ति भोगा यतस्तव ॥

१३५

प्रतिज्ञां कारयित्वैवं स्वयं सोऽभूदलक्षितः ।
तमपि श्रद्धया दिव्यं नमाम्यज्ञातपूरुषम् ॥

१३६

मार्ग शुक्लत्रयोदश्यां पुरे रोपडसंज्ञके ।
वैक्रमेऽब्दे वृत्तमिदं युद्धाधिपमिते गते ॥

१३७

विलम्बिमुक्तारत्नादिझल्लरीमण्डितं महत् ।
भास्वरं काञ्चनं छत्रं जटितं हीरकादिभिः ॥

१३८

अन्तरिक्षे निराधारं मध्याह्ने शिखरे गिरेः ।
टीठवालपुरादूर्ध्वं योजनद्वितयेऽद्भुतम् ॥

१३९

काश्मीरमण्डले येन कुटीरे पटनिर्मिते ।
आलोकितं निवसता सोऽस्मि शाक्तो महान् शिवः ॥

१४०

गाल्नेत्रमिते वर्षे वैक्रमे मासि चाश्विने ।
शुक्लपक्षे वृत्तमिदं दोधकुच्छनपर्वते ॥

१४१

बिरलानिर्मिते घट्टे श्रीदक्षेश्वरसन्निधौ ।
तीर्थे कनखले गङ्गाप्रवाहे घोरवेगिनि ॥

१४२

चाम्पेयगौरीमुन्मुक्तभृङ्गनीलशिरोरुहाम् ।
परतीरात् समायान्तीं बाहुसन्तरणेन वै ॥

१४३

ग्रीवायां ग्रन्थिसन्नद्धं वसानां वास उत्तमम् ।
हंसपक्षप्रतीकाशं श्वेतं मसृणभास्वरम् ॥

१४४

नवयौवनसम्पन्नां गङ्गां भगवतीं मुहुः ।
अदृश्यां पाठविच्छेदे साश्चर्यमनसाऽद्भुताम् ॥

१४५

श्रीगङ्गालहरीस्तोत्रं पठन् सुस्वरयोगतः ।
अहं वारत्रयं साक्षाद् दृष्टवान् दिव्यरूपिणीम् ॥

१४६

एतच्चमत्कारसाक्षी विप्रोऽप्यूचे तदैव माम् ।
भगवतीप्रसादाख्यो विस्मयान्वितमानसः ॥

१४७

नूनं भगवती गङ्गा पाठसन्तुष्टमानसा ।
दर्शनं दातुमायाता स्वयमेवेति तर्कये ॥

१४८

प्रत्याख्यायाऽपि तद्वाक्यं मया तेन सहैव सा ।
अन्विष्टा सर्वतो लब्धा नैवावाभ्यां पुनः क्वचित् ॥

१४९

वैक्रमेऽब्दे विघ्ननेत्रमिते संवत्सरे गते ।
शुचिमासे वृत्तमिदं वृत्तं विस्मयकारकम् ॥

१५०

अलक्ष्यमूलतन्त्वग्रेऽतिसूक्ष्मे मण्डलं भ्रमत् ।
वर्तुलं निनदत् पुण्यं महद्धीरकभास्वरम् ॥

१५१

तन्मध्यादुत्थिते तन्तोरग्रे स्फटिकभास्वरम् ।
विचित्रनादं सुभगं भ्रमद्वर्तुलमण्डलम् ॥

१५२

तन्मध्यादुत्थिते तन्तोरग्रे माणिक्यभास्वरम् ।
विचित्रशब्दगतिमद् वर्तुलं मण्डलं भ्रमत् ॥

१५३

तन्मध्यादुत्थिते तन्तोरग्रे नीलमणिप्रभम् ।
घोरारावं घोररूपं भ्रमत् सद्वृत्तमण्डलम् ॥

१५४

एवं विलक्षणं दृष्टं मण्डलानां चतुष्टयम् ।
अगम्यशब्दार्थमयं शैवशाक्तत्रिकोणवत् ॥

१५५

इन्द्रप्रस्थे दृष्टमष्टवादनावसरे दिवा ।
महाविद्याप्रसादेन सोऽहं शाक्तो महाशिवः ॥

१५६

इन्द्रप्रस्थे माघमासे विपन्नरमिते गते ।
वैक्रमेऽब्दे वृत्तमिदं बुद्धमन्दिरसन्निधौ ॥

१५७

श्रीसम्प्रदायोक्तनयक्रमेण
सारल्यचेतोहरमात्मशम्भोः ।
ये प्रत्यभिज्ञारसमाप्तुकामा
स्ते गन्थमेनं परिशीलयन्तु ॥

१५८

वैरं विहाय मनुजो मनसा सदैव
प्रोद्यद्दिवाकरमिवात्मशिवं सुरम्यम् ।
नाथं समस्तजगतां परितोष्य शोक
पाथोधिशोषचतुरः स्वकलाबलः स्तात् ॥

१५९

निर्माय मात्मरससिद्धमहारहस्यं
निर्मायसिद्धकरुणारसभूतिमूर्तिम् ।
निर्माय सिद्धगुरुसिद्धमहारहस्यं
दुर्वाससं मुनिवरं गुरुमानमामि ॥

१६०

दुर्वाससो भगवतो वदनारविन्दात्
साक्षान्निधानमधिगम्य समाधियुक्तेः ।
आलम्ब्य तच्छिवकरो जनतापहर्ता
ग्रन्थो व्यधायि विदुषाऽमृतवाग्भवेन ॥

१६१

शम्भुभूतिरहमुत्तमः पुमान्
स्वात्मतामनुभवामि शाश्वतीम् ।
अद्भुते जगति तां स्मरन्नपि
प्रस्मरामि भवभावितात्मवान् ॥

१६२

नभ्रनभ्रमितवैक्रमेऽब्दके
चैत्रशुक्लदशमीतिथौ बुधे ।
ग्रन्थपूर्तिसुकृतं समर्पये
कोपभट्टगुरुराजपादयोः ॥

---

सम्पूर्णमिदं श्रीसिद्धमहारहस्यम् ।
कृतिरियं तत्रभवतः
सर्वतन्त्रस्वतन्त्र-महामहिम-आचार्य-श्रीमदमृतवाग्भवस्य ।

* * *

## श्रीपञ्चस्तवी

द्वितीय संस्करण प्रस्तुत है। यह प्रथम लघुस्तवकी ६०० वर्षसे भी अधिक प्राचीन संस्कृत टीका तथा राष्ट्रभाषानुवादके साथ मुद्रित है। शेष चार स्तोत्र मूलमात्र हैं। साथ ही इस संस्करणमें श्रीमहानुभवशक्तिस्तव भी दिया गया है। कागज और छपाई बहुत उत्तम है। डाक व्यय अलग। मू० ५० पै०

तीसरी वार ## श्रीराष्ट्रालोक छप गया

राष्ट्रभाषानुवाद–सहित

राष्ट्रवादी ही आर्य हैं आर्य ही शान्तिकी स्थापना कर सकते हैं

### भारत भारतीयोंका है

स्वातन्त्र्य हमारा जन्मसिद्ध अधिकार है। राष्ट्र हमारा पिता है, माता है, और आचार्य है। हम सदा उसके सेवक हैं। हमारा राष्ट्र हमें भोग और मोक्ष दोनों देता है।

### हम सच्चे राष्ट्रिय हैं।

अभारतीय भारतके अतिथि हो सकते हैं राष्ट्रिय नहीं

हम संक्रान्तिका सदा आदर करते हैं। हमें ऐसी शान्ति नहीं चाहिये जो राष्ट्रको परतन्त्र बनाये।

### राष्ट्रिय राष्ट्रके पुत्र होते हैं, पति नहीं

भारतीय अपने आपको हिन्दू माननेमें गौरव का अनुभव करते हैं। भारतीय आदर्शके विपरीत क्रान्ति किंक्रान्ति है संक्रान्ति नहीं। यदि आप इन भावोंसे स्नेह करते हैं तो "श्रीराष्ट्रालोक" अवश्य पढ़िये।

### श्रीराष्ट्रालोक परम पवित्र भारतीय आदर्शका एक जीवन शास्त्र है

राष्ट्रप्रेमी इसका आदर कर रहे हैं। जनता हाथों हाथ अपना रही है। आप भी आज ही मँगाइये। ( मू० ५० पै० ) मार्गव्यय अलग।

श्रीः

## श्रीमदमृतग्रन्थमालाके पांच पुष्प

१–श्रीमहाऽनुमत्रशक्तिस्तवः–संस्कृत तथा हिन्दी व्याख्यासहित
मू० ५० पैं०

२–श्रीपरशुरामस्तोत्रम्–राष्ट्रभाषानुवादसहित सचित्र
तृतीय संस्करण अमूल्य

३–श्रीश्रीत्रिंशतिकाशास्त्रम्–दो संस्कृत व्याख्याओं तथा एक हिंदी व्याख्या के साथ मू० ४ रु० ७५ पैं०

३–श्रीसप्तपदीहृदयम्–संस्कृत, हिंदी, इंगलिश रूपान्तरोंके साथ
मू० १ रु०

५–श्रीसञ्जीवनीदर्शनम्–हिंदी भाषान्तरसहित मू० १ रु०

## श्रीग्रन्थमालाके दो पुष्प

१–श्रीपञ्चस्तवी–प्रथमस्तव संस्कृत व्याख्या तथा हिंदी भाषान्तरके साथ मू० ७५ पैं०

२–श्रीललितासहस्रकाव्यम्–हिंदी भाषानुवादके साथ
मू० ५ रु० २५ पैं०

## श्रीमदानन्दवनप्रसूनमालाका एक पुष्प

१--श्रीसिद्धमहारहस्यम् मू० १) रु०

## अन्य ग्रन्थ

१–श्रीराष्ट्रालोकः–राष्ट्रभाषानुवादसहित तृतीय संस्करण मू० ५० पैं०

२–श्रीआत्मविलासः–श्रीसुन्दरीराष्ट्रभाषाभाष्यसहित मू० २ रु०

३–श्रीसंक्रान्तिपञ्चदशी–राष्ट्रभाषागद्यपद्यानुवादसहित

४–श्रीमदमृतसूक्तिपञ्चाशिका–संस्कृत तथा राष्ट्रभाषाव्याख्यासहित

५–श्रीस्वाध्यायमहिमस्तोत्रम्–हिंदी भाषान्तरके साथ ।